१३ ॐ ऐं ह्रीं श्रीं ओं नीपप्रियायै नमः ।
१४ ॐ ऐं ह्रीं श्रीं ओं कदम्बेश्यै नमः ।
१५ ॐ ऐं ह्रीं श्रीं ओं कदम्बवनवासिन्यै नमः ।
१६ ॐ ऐं ह्रीं श्रीं ओं सदामदायै नमः ।

## ललितानामानि

१ ॐ ऐं ह्रीं श्रीं ओं सिंहासनेश्यै नमः ।
२ ॐ ऐं ह्रीं श्रीं ओं ललितायै नमः ।
३ ॐ ऐं ह्रीं श्रीं ओं महाराज्ञ्यै नमः ।
४ ॐ ऐं ह्रीं श्रीं ओं वराङ्कुशायै नमः ।
५ ॐ ऐं ह्रीं श्रीं ओं चापिन्यै नमः ।
६ ॐ ऐं ह्रीं श्रीं ओं त्रिपुरायै नमः ।
७ ॐ ऐं ह्रीं श्रीं ओं महात्रिपुरसुन्दर्यै नमः ।
८ ॐ ऐं ह्रीं श्रीं ओं सुन्दर्यै नमः ।
९ ॐ ऐं ह्रीं श्रीं ओं चक्रनाथायै नमः ।
१० ॐ ऐं ह्रीं श्रीं ओं सम्राज्ञ्यै नमः ।
११ ॐ ऐं ह्रीं श्रीं ओं चक्रिण्यै नमः ।
१२ ॐ ऐं ह्रीं श्रीं ओं चक्रेश्वर्यै नमः ।
१३ ॐ ऐं ह्रीं श्रीं ओं महादेव्यै नमः ।
१४ ॐ ऐं ह्रीं श्रीं ओं कामेश्यै नमः ।
१५ ॐ ऐं ह्रीं श्रीं ओं परमेश्वर्यै नमः ।
१६ ॐ ऐं ह्रीं श्रीं ओं कामकोटिराजप्रियायै नमः ।
१७ ॐ ऐं ह्रीं श्रीं ओं कामकोटिकायै नमः ।
१८ ॐ ऐं ह्रीं श्रीं ओं चक्रवर्तिन्यै नमः ।
१९ ॐ ऐं ह्रीं श्रीं ओं महाविद्यायै नमः ।
२० ॐ ऐं ह्रीं श्रीं ओं शिवानङ्गवल्लभायै नमः ।
२१ ॐ ऐं ह्रीं श्रीं ओं सर्वपाटलायै नमः ।

२२ ॐ ऐं ह्रीं श्रीं ओं कुलनाथायै नमः ।
२३ ॐ ऐं ह्रीं श्रीं ओं आम्नायनाथायै नमः ।
२४ ॐ ऐं ह्रीं श्रीं ओं सर्वाम्नायनिवासिन्यै नमः ।
२५ ॐ ऐं ह्रीं श्रीं ओं श्रृङ्गारनायिकायै नमः ।
अथ यथावकाशं सहस्रनामावल्यादिना अर्चनं कुर्यात् ।

## धूपः

ॐऐं ह्रीं श्रीं धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतमम् अह्रुतमसि हविर्धानं दृꣳहस्व माह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षे माभेर्मा संविक्था मा त्वा हिꣳसिषम् ।

लाक्षासम्मिलितैः शिलारसयुतैः श्रीवाससम्मिश्रितैः
कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषालोडितैः ।
श्रीखण्डागुरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभिः
धूपं ते परिकल्पियामि जननि! त्वं धूपमङ्गीकुरु ॥

ॐ श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः धूपमाघ्रापयामि। धूपानन्तरं आचमनीयं समर्पयामि ।

## दीपः

ॐऐं ह्रीं श्रीं उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम । पशूꣳश्च मह्यमावह जीवनं च दिशो दिश । मा नो हिꣳसीर्जातवेदो गामश्वं पुरुषं जगत् । अविभ्रदग्न आगहि श्रिया मा परिपातय ।

स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

ॐ श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः दीपं दर्शयामि । दीपानन्तर आचमनीयं समर्पयामि ।

ततः सर्वसंक्षोभिण्यादिमुद्राः प्रदर्शयेत् ।

१ ॐऐं ह्रीं श्रीं द्रां सर्वसंक्षोभिणीमुद्रां प्रदर्शयामि नमः ।
२ ॐऐं ह्रीं श्रीं द्रीं सर्वविद्राविणीमुद्रां प्रदर्शयामि नमः ।
३ ॐऐं ह्रीं श्रीं क्लीं सर्वाकर्षिणीमुद्रां प्रदर्शयामि नमः ।
४ ॐऐं ह्रीं श्रीं ब्लूं सर्ववशङ्करीमुद्रां प्रदर्शयामि नमः ।
५ ॐऐं ह्रीं श्रीं सः सर्वोन्मादिनीमुद्रां प्रदर्शयामि नमः ।
६ ॐऐं ह्रीं श्रीं क्रों सर्वमहाङ्कुशामुद्रां प्रदर्शयामि नमः ।
७ ॐऐं ह्रीं श्रीं हस्खफ्रें सर्वखेचरीमुद्रां प्रदर्शयामि नमः ।
८ ॐऐं ह्रीं श्रीं हसौः सर्वबीजमुद्रां प्रदर्शयामि नमः ।
९ ॐऐं ह्रीं श्रीं ऐं सर्वयोनिमुद्रां प्रदर्शयामि नमः ।
षोडश्युपासकानां तु
१० ॐऐं ह्रीं श्रीं हस्रैं हस्क्लरीं हस्रौः सर्वत्रिखण्डामुद्रां प्रदर्शयामि नमः।

## नैवेद्यम्

श्रीदेव्यग्रे चतुरश्रमण्डलं सामान्यार्घ्योदकेन विधाय तत्र आधारोपरि स्थापितं सौवर्णरौप्यकांस्यादिस्थालीचषकभरितम् । भक्ष्यभोज्यचोष्यलेह्य-पेयात्मकं रसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमुग्धं यथासम्भवं वा नैवेद्यं विधाय मूलेन निरीक्ष्य -

ॐ ऐं ह्रीं श्रीं मूलं निरीक्ष्य -

ॐऐं ह्रीं श्रीं ऐं ह्ः इति अस्त्रेण प्रोक्ष्य -

ॐऐं ह्रीं श्रीं ओं जुं सः वौषट् इति सप्तवारमभिमन्त्रितजलेन प्रोक्ष्य चक्रमुद्रां प्रदर्श्य -



ॐऐं ह्रीं श्रीं यं इति वायुबीजेनाधोमुखवामकरेण सप्तवारं जपन् तद्गतदोषान् संशोष्य -

ॐऐं ह्रीं श्रीं रं इति वह्निबीजेन अधोमुखदक्षकरेण संदह्य -

ॐऐं ह्रीं श्रीं वं इति धेनुमुद्रया अमृतीकृत्य -

ॐऐं ह्रीं श्रीं मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य -

ॐऐं ह्रीं श्रीं मूलेन सप्तवारमभिमन्त्र्य -

ॐऐं ह्रीं श्रीं ओं क्लीं कामदुघे अमोघे वरदे विच्चे स्फुर स्फुर श्रीं परश्रीं । इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य -

दैव्यै पाद्यं अर्घ्यं आचमनीयं दत्त्वा -

ॐऐं ह्रीं श्रीं मूलेन देवीं त्रिः सन्तर्प्य -

ॐ ऐं ह्रीं श्रीं मूलं ललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः ।

पात्रान्तरे विशेषार्घ्यं किञ्चिद्गृहीत्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन् ।

ॐऐं ह्रीं श्रीं मूलं साङ्गायै सायुधायै सवाहनायै सपरिवारायै सर्वात्मिकायै श्रीमहात्रिपुरसुन्दरीपराभट्टारिकायै नैवेद्यं कल्पयामि नमः- इति नैवेद्यपरिसरे संस्थाप्य । कृताञ्जलिः ।

ॐऐं ह्रीं श्रीं हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।<br>
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ॥<br>
शर्करापायसापूपघृतव्यञ्जनसंयुतम् ।<br>
विचित्ररुचि नैवेद्यं हृद्यमावेदयाम्यहम् ॥ इति निवेद्य

ॐ भुर्भूस्सुवः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । सत्यं त्वर्तेन परिषिञ्चामि (इति दिवा), ऋतं त्वा सत्येन परिषिञ्चामि (इति रात्रौ) । अमृतोपस्तरणमसि इति देव्यै आपोशनं दत्त्वा वामकरेण ग्रासमुद्रां दर्शयन्, दक्षकरेण प्राणादिपञ्चमुद्रा-प्रदर्शनपूर्वकं पञ्च प्राणाहुतीः कल्पयेत् । यथा -

ॐऐं ह्रीं श्रीं ऐं प्राणाय स्वाहा ।

ॐऐं ह्रीं श्रीं क्लीं अपानाय स्वाहा ।
ॐऐं ह्रीं श्रीं सौः व्यानाय स्वाहा ।
ॐऐं ह्रीं श्रीं ऐं क्लीं उदानाय स्वाहा ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः समानाय स्वाहा ।
ॐऐं ह्रीं श्रीं ब्रह्मणे स्वाहा ।
ॐऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं आत्मतत्त्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु।
ॐऐं ह्रीं श्रीं क्लीं ह स क ह ल ह्रीं विद्यातत्त्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु ।
ॐऐंह्रींश्रींसौः सकल ह्रीं शिवतत्त्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु।
ॐऐंह्रींश्रींऐं क्लींसौः मूलं सर्वतत्त्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु ।
इति किञ्चित्किञ्चित् सामान्यार्घ्योदकं दद्यात् ।
ॐऐं ह्रीं श्रीं चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम् ।
निवेदयामि ते देवि सानुगायै जुषाण तत् ॥
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः। मधुनक्तमुतोषसि मधुमत्पार्थिवꣳरजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत् ।
ॐऐं ह्रीं श्रीं नमस्ते देवदेवेशि सर्वतृप्तिकरं परम् ।
अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीलतम् ॥
अमृतानन्दसम्पूर्णं गृहाण जलमुत्तमम् ।
अतिशीतमुशीरवासितं तव पाणौ च मया निवेदितम् ॥
पटपूतमिदं जितामृतं शुचि गङ्गामृतमम्ब! पीयताम् ॥
ॐऐं ह्रीं श्रीं श्रीललितायै अमृतपानीयं समर्पयामि ।
भुञ्जानां परदेवतां ध्यायेत् -
घण्टानाद कुर्वन्,

ॐऐं ह्रीं श्रीं ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्ता-
द्दिव्याकल्पैर्ललितरमणीवीज्यमाना सखीभिः ।
नर्मक्रीडाप्रहसनपरा हासयन्ती सुरेशान्
भुङ्क्ते पात्रे कनकखचिते षड्रसान् लोकधात्री ॥
कलिङ्ग कोषातक संयुतानि जम्बीर नारङ्ग समन्वितानि ।
सनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि ॥
देवीं भुक्तवतीं सुतृप्तां ध्यात्वा -
ॐऐं ह्रीं श्रीं ओं अमृतापिधानमसि । इत्युत्तरापोशनं दत्वा -
ॐऐं ह्रीं श्रीं श्रीललितायै हस्तप्रक्षालनं गण्डूषं पादप्रक्षालनं आचमनीयं कल्पयामि नमः ।
उष्णोदकैः पणियुगं मुखञ्च प्रक्षाल्य मातः कलधौतपात्रे ।
कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन ॥
श्रीललितायै गण्डूषाद्युपचारान्कल्पयामि ।
ताम्रबलिपात्रे निवेदनसामग्रीः किञ्चित्किञ्चिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलं अस्त्रेण शोधयेत् ।
ॐऐं ह्रीं श्रीं अस्त्राय फट्

## ताम्बूलम्

ॐऐं ह्रीं श्रीं वनस्पतिदेवत्याय ताम्बूलाय नमः। इति सामान्यार्घ्योदकेन प्रोक्ष्य - इससे सामान्यार्घ्य के जल से ताम्बूल का प्रोक्षण कर निम्न मन्त्र से भगवती को अर्पित करें ।
ॐऐं ह्रीं श्रीं तमालदलकर्पूरपूगभगसमन्वितम् ।
एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

## कुलदीपः

ॐऐं ह्रीं श्रीं मूलं अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।
त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये ।।

## कर्पूरनीराजनम्

ॐऐं ह्रीं श्रीं सोमो वा एतस्य राज्यमादत्ते । यो राजा सन्नाज्यो वा सोमेन यजते । देवसुवामेतानि हवीꣳषि भवन्ति । एतावन्तो वै देवानाँ सवाः । त एवास्मै सवान् प्रयच्छन्ति । त एनं पुनः सुवन्ते राज्याय । देवसू राजा भवति ।

ॐऐं ह्रीं श्रीं स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठिकं राज्यं महाराज्यमाधिपत्यम् । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे । समे कामान्कामकामाय मह्यम् । कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः ।

## मन्त्रपुष्पम्

योऽपां पुष्पं वेद । पुष्पवान् प्रजावान् पशुमान् भवति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान् प्रजावान् पशुमान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । अग्निर्वा अपामायतनम् । आयतनवान् भवति । योऽग्नेरायतनं वेद । आयतनवान् भवति । आपो वा अग्नेरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । वायुर्वा अपामायतनम् । आयतनवान् भवति । यो वायोरायतनं वेद । आयतनवान् भवति । आपो वै वायोरायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । असौ वै तपन्नपामायतनम् । आयतनवान् भवति । योऽमुष्य तपत आयतनं वेद । आयतनवान् भवति। आपो वाअमुष्य तपत आयतनम् । आयतनवान् भवति । य एवं वेद। योऽपामायतनम् वेद । आयतनवान् भवति । चन्द्रमा वा अपामायतनम् ।

आयतनवान् भवति । यश्चन्द्रमस आयतनं वेद । आयतनवान् भवति । आपो वै चन्द्रमस आयतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनम् वेद । आयतनवान् भवति । नक्षत्राणि वा अपामायतनम् । आयतनवान् भवति । यो नक्षत्राणामायतनं वेद । आयतनवान् भवति । आपो वै नक्षत्राणामायतनम् । आयतनवान् भवति । य एवं वेद । योऽपामायतनं वेद । आयतनवान् भवति । पर्जन्यो वा अपामायतनम् । आयतनवान् भवति । यः पर्जन्यस्यायतनं वेद । आयतनवान् भवति । आपो वै पर्जन्यस्यायतनम् । आयतनवान् भवति । य एवं वेद। योऽपामायतनं वेद । आयतनवान् भवति । संवत्सरो वा अपामायतनम् । आयतनवान् भवति । यस्संवत्सरस्यायतनं वेद । आयतनवान् भवति । आपो वै संवत्सरस्यायतनम् । आयतनवान् भवति । य एवं वेद । योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ।।

***

## सप्तमः खण्डः

# कामकलाध्यानम्

स्थूलं बिन्दुना मुखं बिन्दुद्वयेन कुचौ सपरार्धेन योनिः इति कामकलां ध्यायेत् ।

**मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो**
**हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् ।**
**स सद्यः संक्षोभं नयति वनिता इत्यतिलघु**
**त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगम् ॥**

कामेश्वरी और कामेश्वर के अभेदयोग का सामरस्य ही कामकला है । कामकला ध्यान के दो भेद हैं - स्थूल और सूक्ष्म । ईकार में मिश्र, रक्तबिन्दु की भावना करके उन बिन्दुओं में मुख, स्तन-मण्डल और योनि का चिन्तन करें और इन सबका आत्मा के साथ ऐक्य स्थापित कर आत्मातत्त्व-भावना से परमानन्द का अनुभव होता है । यह स्थूल-ध्यान है ।

**महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।**
**भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृत्द्भावयेत्स त्वमेव ॥**
**तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते।**
**परानन्दसन्धानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥**

सूक्ष्मं - कामकला = क्+अ+अ, म्+अ; क्+अ, ल्+अ+अ ।

## कामशब्दविमर्शः

**क्=माया, अ=तदवच्छिन्नं चैतन्यमीश्वरः,. अ=शुद्धचैतन्यं; म्=अविद्या, अ=तदवच्छिन्नं चैतन्यं जीवः । मायावच्छिन्नचैतन्यं अविद्यावच्छिन्नचैतन्यं च शुद्धचैतन्यमेव । उपाधिनिरसनेन जीवेश्वरौ शुद्धब्रह्मणोऽभिन्नौ । सामानाधिकरण्येन जीव एव ईश्वरः । भागत्याग-**

**लक्षणयाऽयमर्थः पर्यवसन्नः । अहं सः=हंसः, सः अहं=सोऽहम्।**

क=मायाः, अ=उससे अवच्छिन्न चैतन्य ईश्वर; अ-शुद्ध चैतन्य, म्-अविद्या, अ उससे अवच्छिन्न चैतन्य जीव । माया से अवच्छिन्न चैतन्य और अविद्या से अवच्छिन्न चैतन्य शुद्ध चैतन्य है । उपाधिरहित जीवेश्वर ही शुद्ध ब्रह्म है । सामानाधिकरण्य से जीव ही ईश्वर है और भागत्यागलक्षणा से इसका ऐक्य पर्यवसान होता है ।

## कलाशब्दविमर्शः

क्=आकाशं, अ=तदुपहितचैतन्यं, ल्=पृथिवी, अ=तदुपहितचैतन्यं, अ=शुद्धचैतन्यम् । पृथिव्याद्याकाशान्तं परिदृश्यमानः सर्वः प्रपञ्चो ब्रह्मैव । 'सर्वं खल्विदं ब्रह्म' इति हि श्रुतिः ।

**शिवाद्यवनिपर्यन्तपरिदृश्यमानसर्वप्रपञ्चाधिष्ठाननिर्विशेषब्रह्मैवाहमित्य-खण्डार्थानुसन्धानं कामकलाविमर्शः ।**

शिव से पृथिवी पर्यन्त सभी दृश्यमान प्रपञ्च के अधिष्ठान निर्विशेष ब्रह्म ही है, इस अर्थ का अनुसन्धान ही कामकलाविमर्श है ।

## सौभाग्यहृदयम्

**सौः इति शक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत् । सकार विसर्ग-औकारसमुदायः-सौः इति । सकारः तच्छब्दपर्यायः । विसर्गेण हकारो लक्षितः । स च अहंशब्दपर्यायः । औकारः तयोः सामरस्यबोधकः। ब्रह्मैवाहमिति ।**

**कामकला ध्यातैव सौभाग्यहृदयमामृष्टं भवति ।**

प्रकाश (अ), विमर्श (ह), विषयक अहन्ता का ध्यान 'कामकला' का सूक्ष्म ध्यान है । इसमें यह ध्यान करें कि यह 'आत्मा' 'ब्रह्म' है तथा समस्त विश्व इस 'ब्रह्माभिन्न आत्मा' से ही उत्पन्न हुआ है और इसमें ही 'अवस्थित' है तथा इसमें ही 'लय' हो जाता है ।

***

## अष्टमः खण्डः

# होमः

होमस्य इतिकर्तव्यता ग्रन्थान्तरे द्रष्टव्या । होमः कृताकृतः । अकरणे न प्रत्यवायः । करणे तु श्रेय एव ।

होम नहीं करने पर पाप नहीं होता है और होम करने से तो अभ्युदय ही होता है । करने वालों के लिए इसका विधान अनेक ग्रन्थों में दिया गया है ।

## नवमः खण्डः

बलिदानि हविः प्रतिपत्त्यन्तम् ।

# बलिदानम्

देव्या दक्षभागे सामान्यार्घ्योदकेन त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं परिकल्प्य -

ॐऐं ह्रीं श्रीं ऐं व्यापकमण्डलाय नमः - इति गन्धाक्षतैरभ्यर्च्य- अर्धभक्तपूरितोदकं सक्षीरादित्रयं बलिपात्रं तत्र विन्यस्य -

ॐऐं ह्रीं श्रीं ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा-इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्त्वा वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैर्ग्रासितं विभाव्य योनिमुद्रया प्रणमेत् ।

इस मन्त्र को तीन बार पढ़कर दांयें हाथ को उसपर रखकर कर बांये हाथ से तत्त्व मुद्रा से स्पर्श करें -



और बलि के ऊपर जल देकर बांये जांघ से आघात कर, हाथ से स्फोट करके प्रसन्न मन से बाण मुद्रा से यह भावना करें कि भूतों ने बलि ग्रहण कर ली है ।



ततः पादौ प्रक्षाल्य, आचम्य, प्रदक्षिणनमस्कारं कृत्वा यथाशक्ति जपमाचरेत् ।

अजेशशक्तिगणपभास्कराणां क्रमादिमाः ।
वेदार्धचन्द्रवह्नयादिसंख्याः स्युः सर्वसिद्धये ।
पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ।
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥
रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानी पदपङ्कजाभ्याम् ॥
पापोऽहं पापकर्माहं पापात्मा पापसम्भवः ।
त्राहिमां कृपया देवि शरणागत वत्सले ॥
अन्यथा शरणं नास्ति त्वमेव शरणं शिवे ।
तस्मात् कारुण्यभावेन रक्षरक्षाखिलेश्वरि ॥
याचेऽहं याचेऽहं तवचरणपद्मयोर्भक्तिम् ।
याचेऽहं याचेऽहं पुनरपि तामेव तामेव ॥
आपादि किं करणीयम् स्मरणीयं चरणयुगलमम्बायाः ।
तत्स्मरणं किं कुरुते ब्रह्मादीश्चापि किङ्करीकुरुते ॥

पातय वा पाताले स्थापय वा सकललोक साम्राज्ये ।
मातस्तवपदयुगलं नाहं मुञ्चामि नैव मुञ्चामि ।।
क्षमा प्रार्थनां समर्पयामि ।

# जपः विधिः

## विनियोगः

ॐ अस्य श्रीमहात्रिपुरसुन्दरी पञ्चदशाक्षरी महामन्त्रस्य भगवान् आनन्दभैरवऋषिः, पङ्क्तिश्छन्दः, श्रीमहात्रिपुरसुन्दरी देवता, क ए ई ल ह्रीं बीजं, ह स क ह ल ह्रीं शक्तिः, स क ल ह्रीं कीलकं, श्रीविद्यापरमेश्वरीप्रसादसिद्ध्यर्थे जपे विनियोगः ।

## ऋष्यादिन्यासः

ॐ ऐं ह्रीं श्रीं आनन्दभैरवर्षये नमः - शिरसि ।
ॐ ऐं ह्रीं श्रीं पङ्क्तयै छन्दसे नमो - मुखे ।
ॐ ऐं ह्रीं श्रीं महात्रिपुरसुन्दरीदेवतायै नमो - हृदये ।
ॐ ऐं ह्रीं श्रीं क ए ई ल ह्रीं बीजाय नमः - गुह्ये ।
ॐ ऐं ह्रीं श्रीं ह स क ह ल ह्रीं शक्तये नमः - पादयोः ।
ॐ ऐं ह्रीं श्रीं स क ल ह्रीं कीलकाय नमः - नाभौ ।
ॐ ऐं ह्रीं श्रीं महात्रिपुरसुन्दरी प्रसादसिद्ध्यर्थे जपे विनियोगाय नमः कर सम्पुटे
ॐ ऐं ह्रीं श्रीं मूलविद्यया सर्वाङ्गे त्रिर्व्यापकम् ।

## करन्यासः

ॐ ऐं ह्रीं श्रीं कएईलह्रीं - अङ्गुष्ठाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं हसकहलह्रीं - तर्जनीभ्यां नमः।
ॐ ऐं ह्रीं श्रीं सकलह्रीं - मध्यमाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं कएईलह्रीं - अनामिकाभ्यां नमः।

ॐ ऐं ह्रीं श्रीं हसकहलह्रीं - कनिष्ठिकाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं सकलह्रीं - करतलकरपृष्ठाभ्यां नमः।

## हृदयादिन्यासः

ॐ ऐं ह्रीं श्रीं कएईलह्रीं - हृदयाय नमः ।
ॐ ऐं ह्रीं श्रीं हसकहलह्रीं - शिरसे स्वाहा ।
ॐ ऐं ह्रीं श्रीं सकलह्रीं - शिखायै वषट् ।
ॐ ऐं ह्रीं श्रीं कएईलह्रीं - कवचाय हुम् ।
ॐ ऐं ह्रीं श्रीं हसकहलह्रीं - नेत्रत्रयाय वौषट् ।
ॐ ऐं ह्रीं श्रीं सकलह्रीं - अस्त्राय फट् ।
भूर्भुवः सुवरोमिति दिग्बन्धः ।

## ध्यानम्

बालार्कारुणतेजसं त्रिनयनां रक्ताम्बरोल्लासिनीं
नानालंकृतिराजमानवपुषं बालोडुराट्च्छेखराम् ।
हस्तैरिक्षुधनुः सृणीं सुमशरं पाशं मुदा बिभ्रतीं
श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधारभूतां भजे ॥

## मन्त्रः

ऐं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं।

## गायत्री

ॐ क ए ई ल ह्रीं वागीश्वर्यै च विद्महे ॐ ह स क ह ल ह्रीं कामेश्वर्यै च धीमहि । ॐ स क ल ह्रीं तन्नः शक्तिः प्रचोदयात्।

## पञ्चदशीमूलविद्यान्यासः

ॐ ऐं ह्रीं श्रीं कं नमः शिरसि।
ॐ ऐं ह्रीं श्रीं एं नमः मूलाधारे।
ॐ ऐं ह्रीं श्रीं ईं नमः हृदि।

| | | |
|---|---|---|
| ॐ ऐं ह्रीं श्रीं | लं नमः | दक्षनेत्रे। |
| ॐ ऐं ह्रीं श्रीं | ह्रीं नमः | वामनेत्रे। |
| ॐ ऐं ह्रीं श्रीं | हं नमः | भ्रूमध्ये। |
| ॐ ऐं ह्रीं श्रीं | सं नमः | दक्षश्रोत्रे। |
| ॐ ऐं ह्रीं श्रीं | कं नमः | वामश्रोत्रे। |
| ॐ ऐं ह्रीं श्रीं | हं नमः | मुखे। |
| ॐ ऐं ह्रीं श्रीं | लं नमः | दक्षभुजे। |
| ॐ ऐं ह्रीं श्रीं | ह्रीं नमः | वामभुजे। |
| ॐ ऐं ह्रीं श्रीं | सं नमः | पृष्ठे। |
| ॐ ऐं ह्रीं श्रीं | कं नमः | दक्षजानुनि। |
| ॐ ऐं ह्रीं श्रीं | लं नमः | वामजानुनि। |
| ॐ ऐं ह्रीं श्रीं | ह्रीं नमः | नाभौ। |

।। इति श्रीपञ्चदशाक्षरीमन्त्रः ।।

# श्रीषोडशाक्षरीमन्त्रः

## विनियोगः

ॐ अस्य श्रीषोडशीमहामन्त्रस्य दक्षिणामूर्तिर्ऋषिः पंक्तिश्छन्दः श्री षोडशाक्षरी महात्रिपुरसुन्दरीदेवता कएईलह्रीं बीजं सकलह्रीं शक्तिः हसकहलह्रीं कीलकम् श्रीराजराजेश्वरीप्रसादसिद्ध्यर्थे जपे विनियोगः।

## ऋष्यादिन्यासः

ॐ दक्षिणामूर्तये ऋषये नमः-शिरसि।

ॐ पंक्तिश्छन्दसे नमः-मुखे ।

ॐ श्री षोडशाक्षरीमहात्रिपुरसुन्दरीदेवतायै नमो-हृदि ।

ॐ कएईलह्रीं बीजाय नमो-गुह्ये ।

ॐ सकलह्रीं शक्तये नमः-पादयोः।

ॐ हसकहलह्रीं कीलकाय नमो-नाभौ ।

ॐ श्रीराजराजश्वरीप्रसादसिद्धयर्थे जपे विनियोगाय नमः- सर्वाङ्गेषु ।

## करन्यासः

ॐ श्रीं ह्रीं क्लीं ऐं सौः-अङ्गुष्ठाभ्यां नमः ।

ॐॐ ह्रीं श्रीं-तर्जनीभ्यां नमः ।

ॐ क ए ई ल ह्रीं-मध्यमाभ्यां ।

ॐ ह स क ह ल ह्रीं-अनामिकाभ्यां नमः ।

ॐ स क ल ह्रीं-कनिष्ठकाभ्यां नमः।

ॐ सौः ऐं क्लीं ह्रीं श्रीं-करतलकरपृष्ठाभ्यां नमः ।

## अङ्गन्यासः

ॐ श्रीं ह्रीं क्लीं ऐं सौः - हृदयाय नमः ।

ॐॐ ह्रीं श्रीं - शिरसे स्वाहा ।

ॐ क ए ई ल ह्रीं - शिखायै वषट् ।

ॐ ह स क ह ल ह्रीं - कवचाय हुम् ।

ॐ स क ल ह्रीं - नेत्रत्रयाय वौषट्।

ॐ सौः ऐं क्लीं ह्रीं श्रीं - अस्त्राय फट् ।

## ध्यानम्

सिद्धिसिद्धवृतरत्नभूमिकाकल्पवृक्षवनवाटिसङ्कुले
नीपवाटिमणिमण्डपेऽरुणे शङ्कराङ्ककृतपीठिकामणौ।
आदिपञ्चशिवमञ्चके परे चन्द्रभानुशतकोटिभासुरे
कादिहादिमनुरूपिणीमहं भावयामि परदेवतां शिवाम् ॥

## मूलमन्त्रः

ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं क ए ई ल ह्रीं
ह स क ह ल ह्रीं स क ल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं ।

गुह्यातिगुह्यगोप्त्रीत्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा ॥

इति जपं समर्पयेत् ।

## स्तोत्रम्

ॐऐं ह्रीं श्रीं गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥1॥
प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥2॥
यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।
रविताक्ष्र्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥3॥
यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥4॥
यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ॥5॥
यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥6॥
अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।
ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तनिवासिनीम् ॥7॥
तामीकाराक्षरोद्धारां सारात्सारां परात्पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥8॥
अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥9॥
वन्दे तामहमक्षय्यां क्षकाराक्षररूपिणीम् ।
देवीं कुलकलोल्लासप्रोल्लसन्तीं परां शिवाम् ॥10॥

वर्गानुक्रमयोगेण यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ॥11॥
कामपूर्णजकाराख्यश्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥12॥
इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव तद्यतः ॥
भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ॥
जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥
पिता माता भ्राता गुरुरथ सुहृद् बान्धवजनः
प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।
विशुद्धा विद्या वा पदमपि च तत्प्राप्यमसि मे
त्वमेव श्रीमातः स्वपिमि गतशङ्कः सुखतमः ॥
दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥
हे सद्रूपिणि हे चिदर्चिरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसंजीविनि ।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे श्रीमल्ललिताम्ब हे परशिवे मां पाहि डिम्भं निजम् ॥

नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे ।
नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते ॥
जय जय जगदम्ब भक्तवश्ये,
जय जय सान्द्रकृपावशान्तरङ्गे।
जय जय निखिलार्थदानशौण्डे
जय जय हे ललिताम्ब चित्सुखाब्धे॥
षडङ्गदेवता नित्या दिव्याद्योघत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ॥
अमुकानन्दनाथाय मम श्रीगुरवे नमः ।
अमुकानन्दनाथाय गुरवे परमाय मे ।
अमुकानन्दनाथाय गुरवे परमेष्ठिने ॥
यदिदं श्रीगुरुस्तोत्रं स्वस्वरूपोपलक्षणम् ।
बालभावानुसारेण ममेदं हि विचेष्टितम् ।
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ॥
एवमादिभिः स्तुतिभिर्देवीं स्तुयात् ।

## सुवासिनीपूजा

प्राङ्निमन्त्रितां सुवासिनीमाहूय तां देवीरूपां विभाव्य -
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिनीपरमेश्वरीं ध्यायामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिनीपरमेश्वरीं आवाहयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै आसनं समर्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै पाद्यं समर्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै अर्घ्यं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै आचमनीयं जलं कल्पयामि।

ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै स्नानीयं जलं कल्पयामि।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै गन्धं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै हरिद्राकुङ्कुमं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै पुष्पं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै धूपं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै दीपं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै नैवेद्यं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै ताम्बूलं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै दक्षिणाम् कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै नीराजनं कल्पयामि ।
ॐऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै मंत्रपुष्पाञ्जलिं कल्पयामि ।

सा च दीक्षिता चेत् मूलेन समस्तप्रकटेत्यादिसमष्टिमन्त्रेण च क्रमेण श्रीदेव्यै आवरणदेवताभ्यश्च पुष्पाञ्जलिं दद्यात् । ततस्तस्याः करे क्षीरपात्रं नागरखण्डं च समर्पयेत् । सा च उत्थाय शिरसि श्रीगुरुपादुकामनुना त्रिरिष्ट्वा, हृदये आत्मचतुष्टयं संतर्प्य, चक्रे देवीं त्रिः संतर्प्य, मूलेन पात्रं वामकरे धृत्वा दक्षकरेणाच्छाद्योपविश्य तत्त्वानि शोधयेत् । कर्ता पुनः पात्रान्तरमादाय वक्ष्यमाणमन्त्रेण तस्यै समर्पयेत् । अदीक्षिता चेदलिपात्रदानमेव ।

यथा -

ॐऐं ह्रीं श्रीं अलिपात्रमिदं तुभ्यं दीयते पिशितान्वितम् ।
स्वीकृत्य सुभगे देवि यशो देहि रिपून् जहि ॥

इति मन्त्रेण सुवासिन्यै अथवा श्रीदेव्यै समर्पयेत् ।

सापि तत् सावशेषं स्वीकृत्य -

ॐऐं ह्रीं श्रीं वत्स तुभ्यं मया दत्तं पीतशेषं कुलामृतम् ।
त्वच्छत्रून् संहरिष्यामि तवाभीष्टं ददाम्यहम् ।।

इति मन्त्रेण प्रतिदद्यात् । ततः साधकः सुवासिनीं भोजयित्वा संतर्प्य ताम्बूलाद्यैः संतोषयेत् ।

## सामयिकपूजा

ततः संनिहिते गुरौ गुरुं नत्वा, गन्धकुङ्कुमादिभिरुपचर्य गुरुपादुकामन्त्रेण अभिपूज्य पात्राणि समर्पयेत् । असंनिहिते गुरौ स्वशिरसि गुरुत्रयं यजेत् । संनिहितान् सामयिकानाहूय गन्धकुङ्कुमादिभिरुपचर्य पात्राणि दद्यात् । पश्चात् तत्त्वशोधनं कुर्यात् । सामयिकश्च पात्रमादाय समस्त-प्रकटेत्यादिसमष्टिमन्त्रेण पुष्पाञ्जलिं दत्त्वा स्वशिरसि गुरुत्रयं, हृदये आत्मचतुष्टयं च इष्ट्वा देवीं त्रिः संतर्प्य तत्त्वशोधनं यथोपदिष्टं कुर्यात् ।

ॐऐं ह्रीं श्रीं समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलोत्तीर्णनिगर्भरह-स्यातिरहस्यपरापरातिरहस्ययोगिनीदेवताभ्यो नमः ।

## गुरुत्रयम्

ॐऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोऽहं, हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपण हेतवे श्रीगुरवे नमः अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः ।

ॐऐं ह्रीं श्रीं, ऐं क्लीं सौः सोहं हंसः शिवः हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः सोऽहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः, अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः ।

ॐऐं ह्रीं श्रीं ऐं क्लीं सौः, हंसः शिवः सोहं हंसः, हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं हंसः स्वात्मारामपञ्जरविलीनतेजनसे श्रीपरमेष्ठिगुरवे नमः, अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः ।

## आत्मचतुष्टयं हृदये

ॐ ऐं ह्रीं श्रीं आत्मने नमः ।

ॐ ऐं ह्रीं श्रीं अन्तरात्मने नमः ।

ॐ ऐं ह्रीं श्रीं परमात्मने नमः ।
ॐ ऐं ह्रीं श्रीं जीवात्मने नमः ।
मूलेन देवीं त्रिस्सन्तर्प्य

## तत्त्वशोधनम्

तत्त्वशोधन शुद्धिपात्र से करना चाहिए ।

ॐऐं ह्रीं श्रीं क ए ई ल ह्रीं प्रकृत्यहङ्कारबुद्धिमनस्त्वक्चक्षुःश्रोत्र-जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिल-भूम्यात्मना अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः क ए ई ल ह्रीं आत्मतत्त्वेन आणवमलशोधनार्थं स्थूलदेहं परिशोधयामि जुहोमि स्वाहा । आत्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ।

ॐऐं ह्रीं श्रीं ह स क ह ल ह्रीं मायाकलाऽविद्यारागकालनियति-पुरुषात्मना कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं ह स क ह ल ह्रीं विद्यातत्त्वेन मायिकमलशोधनार्थं सूक्ष्मदेहं परिशोधयामि जुहोमि स्वाहा । अन्तरात्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ।

ॐऐं ह्रीं श्रीं स क ल ह्रीं शिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना यं रं लं वं शं षं सं हं लं क्षं स क ल ह्रीं शिवतत्त्वेन कार्मिकमलशोधनार्थं कारणदेहं परिशोधयामि जुहोमि स्वाहा । परमात्मा मे शुद्ध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा ।

ॐऐं ह्रीं श्रीं मूलं प्रकृत्यहंकारबुद्धिमनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राण-वाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूमिमाया-कलाऽविद्याराग कालनियतिपुरुषशिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं मूलं सर्वतत्त्वेन सर्वदेहं सर्वदेहाभिमानिनं

जीवात्मानं परिशोधयामि जुहोमि स्वाहा । ज्ञानात्मा मे शुद्ध्यन्तां ज्योतिरिहं विरजा विपाप्मा भूयासँ स्वाहा ।

षोडश्युपासकानां पञ्चमपात्रेण -

ॐऐं ह्रीं श्रीं मूलं पूर्णमदः पूणमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्गमेवावशिष्यते ॥

ॐऐं ह्रीं श्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ।

इति (गुरौ संनिहिते होष्यामि इति सम्प्रार्थ्य गुरोरनुज्ञां लब्ध्वा) चिदग्नौ होमबुद्ध्या जुहुयात् ।

ततः पात्रं प्रक्षाल्य तत्र सुवर्णपुष्पाक्षतान्निक्षिप्य

ॐऐं ह्रीं श्रीं देवानाथ गुरो स्वामिन् देशिक स्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पात्रं पूर्णतरं कुरु ॥

इति गुरवे समर्पयेत् । असन्निहिते गुरौ स्वशिरसि पात्रं निधाय आत्मपात्रमण्डले निक्षिपेत् ।

***

## दशमः खण्डः

# पूजासमर्पण-देवतोद्वासने

साधुवाऽसाधुवा कर्म यद्यदाचरितं मया ।
तत्सर्वं कृपया देवि गृहाणाराधनं मम ॥
देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ॥

इति देव्या वामहस्ते पूजां समर्प्य, शङ्खमुद्धृत्य, देव्युपरि त्रिः परिभ्राम्य, तज्जलं हस्ते समादाय, सामयिकानात्मानं च मूलेन प्रोक्ष्य, शङ्खं प्रक्षाल्य निदध्यात् ।

ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य -

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणी मुखकमलताम्बूलरसताम् ॥

ॐऐं ह्रीं श्रीं ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं शिवे ।
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ॥

इति क्षमाप्य सर्वासामावरणदेवतानां श्रीदेव्यङ्गे विलयं विभाव्य खेचरीं बद्ध्वा -

ॐऐं ह्रीं श्रीं हृत्पद्मकर्णिकामध्ये शिवेन सह शङ्करि ।
प्रविश त्वं महादेवि सर्वैरावरणैः सह ॥



ललिते श्रीजगन्मातः यावदाऽवाहनं पुनः ।

तावद् त्वं प्रीतिभावेन् हृदये सुस्थिरा भव ।

इति निर्वाण मुद्रया श्रीचक्रोपरिस्थितपुष्पं गृहीत्वा स्वात्मनि प्रवेशयम् भावयन् तमाघ्राय नाशारन्ध्रमार्गेण श्रीपरदेवतां हृदयकमले प्रविष्टां विभाव्य निर्माल्यं शिरसि धारयेत् ।

इति तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा, तत्र च मूर्तिं पञ्चोपचारैः सम्पूज्य, पुनः आत्माभिन्नसंविद्रूपेण भावयेत् ।

अनया पूजया बिन्दुतर्पणसहितया भगवती सर्वात्मिका श्रीराजराजेश्वरी ललिता पराभट्टारिका ब्रह्मविद्या त्रिपुरसुन्दरी देवता प्रीयताम् । तत्सत् ब्रह्मार्पणमस्तु ।

***

# एकादशः खण्डः

# शान्तिस्तव-विशेषार्घ्योद्वासने

## शान्तिस्तव

ॐऐं ह्रीं श्रीं सम्पूजकानां परिपालकानां
यतेन्द्रियाणां च तपोधनानाम्।
देशस्य राष्ट्रस्य कुलस्य राज्ञां
करोतु शान्तिं भगवान् कुलेशः॥
नन्दन्तु साधककुलान्यणिमादिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादि शिवान्तं च जगद्यज्ञेन तृप्यतु ॥

## विशेषार्घ्योद्वासनम्

मूलेन विशेषार्घ्यपात्रं आमस्तकमुद्धृत्य तत्क्षीरं पात्रान्तरेणादाय ''ॐऐं ह्रीं श्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ।'' इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा -

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेःस्वभावात्।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

ब्राह्मणान् सुवासिनीश्च भोजयित्वा स्वयमपि भुक्त्वा यथासुखं विहरेत्।

मूलमन्त्र से विशेषार्घ्यपात्र को मस्तक तक उठाकर उस क्षीर को

दूसरे पात्र में लेकर "**ॐऐं ह्रीं श्रीं आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ।**" मन्त्र से अपनी कुण्डलिनी की अग्नि में हवन कर दें ।

अब श्रीयन्त्र के अभिषेक तर्पण आदि के जल से अपने शरीर का मार्जन करके पूजन-शेष चन्दन से अपने ललाट पर तिलक करके अपने को श्रीचक्र से अभिन्न (श्रीचक्रमय) होने की भावना करें । आचमन करके भगवती को प्रणाम करें ।

अब ब्राह्मण और सुवासिनी को भोजन कराकर स्वयं भी भोजन कर यथासुख विहार करें ।

।। इति शिवम् ।।

***

# तन्त्रराजोक्तं नित्याकवचम्

ममस्तापद्विमुक्त्यर्थं सर्वसम्पदवाप्तये ।
भूतप्रेतपिशाचादिपीडाशान्त्यै सुखाप्तये ॥1॥
समस्तरोगनाशाय समरे विजयाय च ।
चोरसिंहद्वीपिगजगवयादिभयानके ॥2॥
अरण्ये शैलगहने मार्गे दुर्भिक्षके तथा ।
सलिलाग्निमरुत्पीडास्वब्धौ पोतादिसङ्कटे ॥3॥
प्रजप्य नित्याकवचं सकृत्सर्वं तरत्यसौ ।
सुखी जीवति निर्द्वन्द्वौ निःसपत्नो जितेन्द्रियः ॥4॥
शृणु तत्कवचं देवि वक्ष्ये तव तदात्मकम् ।
येनाहमपि युद्धेषु देवासुरजयी सदा ॥5॥
सर्वतस्सर्वदाऽऽत्मानं ललिता पातु सर्वदा ।
कामेशी पुरतः पातु भगमालात्वनन्तरम् ॥6॥
दिशं पातु तथा दक्षपार्श्वं मे पातु सर्वदा ।
नित्यक्लिन्न्रा तु भेरुण्डा दिशं पातु सदा मम ॥7॥
तथैव पश्चिमं भागं रक्षेत्सा वह्निवासिनी ।
महावज्रेश्वरी रक्षेदनन्तरदिशं सदा ॥8॥
वामपार्श्वं सदा पातु दूती मे त्वरिता ततः ।
पालयेत्तु दिशं वात्यां रक्षेन्मां कुलसुन्दरी ॥9॥
नित्या मामूर्ध्वतः पातु साऽधो मे पातु सर्वदा ।
नित्या नीलपताकाख्या विजया सर्वतश्च माम् ॥10॥
करोतु मे मङ्गलानि सर्वदा सर्वमङ्गला ।
देहेन्द्रियमनः प्राणान् ज्वालामालिनि विग्रहा ॥11॥
पालयेदनिशं चित्रा चित्तं मे पातु सर्वदा ।
कामात् क्रोधात् तथालोभान्मोहान्मानान्मदादपि ॥12॥

पापान्मत्सरतः शोकात्संशयात्सर्वतः सदा ।
स्तैमित्याच्च समुद्योगादशुभेषु तु कर्मसु ॥13॥
अमत्यात्क्रूरचिन्तातो हिंसातश्चोरतस्तथा ।
रक्षन्तु मां सर्वदा ताःकुर्वन्त्विच्छां शुभेषु च ॥14॥
नित्याः षोडश मां पान्तु गजारुढाः स्वशक्तिभिः ।
तथा हयसमारूढाः पान्तु मां सर्वतः सदा ॥15॥
सिंहारुढास्तथा पान्तु मां तरक्षुगता अपि ।
रथारुढाश्च मां पान्तु सर्वतः सर्वदा रणे ॥16॥
तार्क्ष्यारुढाश्च मां पान्तु तथा व्योमगतास्तु ताः ।
भूगताः सर्वदा पान्तु मां सर्वत्र च सर्वदा ॥17॥
भूतप्रेतपिशाचापस्मारकृत्यादिकान् गदान् ।
द्रावयन्तु स्वशक्तीनां भीषणैरायुधैर्मम ॥18॥
गजाश्वद्वीपिपञ्चास्यतार्क्ष्यारुढाखिलायुधाः ।
असंख्याः शक्तयो देव्याः पान्तु मां सर्वतः सदा ॥19॥
सायं प्रातर्जपेन्नित्याकवचं सर्वरत्नकम् ।
कदाचिन्नाशुभं पश्येन्न श्रृणोति च तत्समः ॥20॥

॥ इति नित्याकवचं सम्पूर्णम् ॥

***

॥श्रीः॥

# ॥ श्रीविद्याखड्गमाला ॥

## १ शुद्धशक्तिसम्बुद्ध्यन्तमाला।

क

### श्री कामेश्वरी नित्या

आरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्करम्यां,
हस्ताम्भोजैः सपांशांकुशमदनधनुः सायकैः विस्फुरन्तीम्।
आपीनोतुङ्गवक्षोरुहयुगविलुठत्तारहारोज्ज्वलाङ्गीं,
ध्यायेदम्भोरुहस्थामरुणसुवसनामीश्वरीमीश्वराणाम् ॥

शुक्लप्रतिपदि अमावस्यायाम्

अस्यश्रीशुद्धशक्तिसम्बुद्ध्यन्तमालामहामन्त्रस्य, उपस्थेन्द्रियाधिष्ठायिवरूणादित्य-ऋषये नमः। गायत्रीछन्दसे नमः। सात्त्विककककारभट्टारकपीठस्थितशिव-कामेश्वराङ्कनिलयायै कामेश्वरीललितामहाभट्टारिकायै देवतायै नमः। ऐं बीजं, क्लीं शक्तिः, सौः कीलकं, खड्गसिद्धौ विनियोगः।

**ह्रां इत्यादि करन्यासः**

(१) ह्रां-अङ्गुष्ठाभ्यां नमः।
(२) ह्रीं-तर्जनीभ्यां नमः।
(३) ह्रूं-मध्यमाभ्यां नमः।
(४) ह्रैं अनामिकाभ्यां नमः।
(५) ह्रौं-कनिष्ठिकाभ्यां नमः।
(६) ह्रः-करतलकरपृष्ठाभ्यां नमः।

**ह्रां इत्यादि हृदयादिन्यासः**

(७) ह्रां - हृदयाय नमः।
(८) ह्रीं - शिरसे स्वाहा।
(९) ह्रूं - शिखायै वषट्।
(१०) ह्रैं - कवचाय हुम्
(११) ह्रौं- नेत्रत्रयाय वौषट्।
(१२) ह्रः - अस्त्राय फट्।

### ध्यानम् -

पद्मरागप्रतीकाशां त्रिनेत्रां चन्द्रशेखराम् ।
नवरत्नलसद्भूषां भूषितां पादमस्तकम् ॥

पाशाङ्कुशौ पुष्पशरान्दधतीं पुण्ड्रचापकम् ।
पूर्णतारुण्यलावण्यतरङ्गितकलेवराम् ॥
तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै ।
अष्टादशमहाद्वीपसम्राड्भोक्ता भविष्यति ॥

## गायत्री

कामेश्वर्यै विद्महे नित्यक्लिन्नायै धीमहि ।
तन्नो नित्या प्रचोदयात् ।

## लमित्यादि पञ्चपूजा-

ॐ लं पृथिव्यात्मकं गन्धं परिकल्पयामि ।
ॐ हं आकाशात्मकं पुष्पं परिकल्पयामि ।
ॐ यं वाय्वात्मकं धूपं परिकल्पयामि ।
ॐ रं वह्न्यात्मकं दीपं परिकल्पयामि ।
ॐ वं अमृतात्मकं अमृतं परिकल्पयामि ।
ॐ सं सर्वात्मकं ताम्बूलादि सर्वोपचारान् परिकल्पयामि ।

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि (१२) हृदयदेवि शिरोदेवि शिखादेवि कवचदेवि नेत्रदेव्यस्त्रदेवि (३७) कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि शिव(शिवा)दूति त्वरिते कुलसुन्दरि नित्ये नीलपताके विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये (१०२) परमेश्वरपरमेश्वरि मित्रीशमयि षष्ठीशमय्युड्डीशमयि चर्यानाथमयि लोपामुद्रा-मय्यगस्त्यमयि कालतापनमयि धर्माचारमयि मुक्तकेशीश्वरमयि दीपकला-नाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि कल्याणदेवमयि रत्नदेवमयि वासुदेवमयि (२१७) श्रीरामानन्दमय्यणिमा-सिद्धे लघिमासिद्धे महिमासिद्धे ईशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्धे इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे (२७१) ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि माहेन्द्रि चामुण्डे महालक्ष्मीः(२९६) सर्वसंक्षोभिणि

सर्वविद्राविणि सर्वाकर्षणि सर्ववशङ्करि सर्वोन्मादिनि सर्वमहाङ्कुशे सर्वखेचरि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि (३६५) कामाकर्षणि बुद्ध्याकर्षण्यहङ्काराकर्षणि शब्दाकर्षणि स्पर्शाकर्षणि रूपाकर्षणि रसाकर्षणि गन्धाकर्षणि चित्ताकर्षणि धैर्याकर्षणि स्मृत्याकर्षणि नामाकर्षणि बीजाकर्षण्यात्माकर्षण्यमृताकर्षणि शरीराकर्षणि सर्वाशापरिपूरकचक्र स्वामिनि (४८९) गुप्तयोगिन्यनङ्गकुसुमेऽनमेखलेऽनङ्गमदनेऽनङ्गमदनातुरेऽनङ्ग-रेखेऽनङ्गवेगिन्यनङ्गाङ्कुशेऽनङ्गमालिनि सर्वसंक्षोभणचक्रस्वामिनि गुप्ततर-योगिनि (५२२) सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वह्लादिनि सर्वसम्मोहिनि सर्वस्तम्भिनि सर्वजृम्भिणि सर्ववशङ्करि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधिनि सर्वसम्पत्तिपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयङ्करि सर्वसौभाग्यदायक-चक्रस्वामिनि सम्प्रदाययोगिनि (६२४) सर्वसिद्धिप्रदे सर्वसम्पत्प्रदे सर्वप्रियङ्करि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचिनि सर्वमृत्युप्रशमनि सर्वविघ्न-निवारिणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि सर्वार्थसाधकचक्रस्वामिनि कुलोत्तीर्ण-योगिनि (७१२) सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदे सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितप्रदे सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि (७८९) वशिनि कामेश्वरि मोदिनि विमलेऽरुणे जयिनि सर्वेश्वरि कौलिनि सर्वरोगहरचक्रस्वामिनि रहस्य-योगिनि (८३१) बाणिनि चापिनि पाशिन्यङ्कुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महाश्रीसुन्दरि सर्वसिद्धिप्रदचक्रस्वामिन्यतिरहस्ययोगिनि (८८६) श्रीश्रीमहाभट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि (९१५) त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्ब महात्रिपुरसुन्दरि (९६१) महामहेश्वरि महामहाराज्ञि महामहाशक्ते महामहागुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्पन्दे महामहाशये महामहा-श्रीचक्रनगरसाम्राज्ञि नमस्ते नमस्ते नमस्ते स्वाहा श्रीं ह्रीं ऐं ॥१०३१।

एकत्रिंशदधिकसहस्राक्षराणि।

इति शुद्धशक्तिसम्बुद्ध्यन्तमाला ॥

## २ शुद्धशक्तिनमोऽन्तमाला ।

### ए

### श्री भगमालिनी नित्या

कुन्दकुट्मलसुश्रेणीदन्तपंङ्क्तिविराजिताम् ।
कन्दर्पकोटिलावण्यां वन्देऽहं भगमालिनीम् ॥

शुक्लद्वितीयायाम् कृष्णचतुर्दश्याम्

अस्य श्रीशुद्धशक्तिनमोऽन्तमालामहामन्त्रस्य, पाय्विन्द्रियाधिष्ठायिमित्रादित्यऋषये नमः। उष्णिक्छन्दसे नमः। भोगद-एकारभट्टारकपीठस्थित-एकवीरकामेश्वराङ्कनिलयायै एकलाललितामहाभट्टारिकायै देवतायै नमः। एं बीजं, क्लीं शक्तिः, सौः कीलकं । पादुकासिद्धौ विनियोगः।

ह्रां इत्यादि करहृदयादिन्यासः-

### ध्यानम् -

तादृशं पादुकायुग्ममाप्नोति तव भक्तिमान् ।
यदाक्रमणमात्रेण क्षणात्रिभुवनक्रमः ॥

### गायत्री

भगमालिन्यै विद्महे सर्ववशङ्कर्यै धीमहि ।
तन्नो नित्या प्रचोदयात् ।

लमित्यादि पञ्चपूजा-

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ हृदयदेव्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ शिरोदेव्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ शिखादेव्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कवचदेव्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ नेत्रदेव्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ॐ अस्त्रदेव्यै नमः पादुकां पूजयामि । (१००)
ऐं ह्रीं श्रीं ॐ कामेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ भगमालिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ नित्यक्लिन्नायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ भेरुण्डायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ वह्निवासिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महावज्रेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ शिव(शिवा)दूत्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्वरितायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कुलसुन्दर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ नित्यायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ नीलपताकायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ विजयायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्री ॐ सर्वमङ्गलायै नमः पादुकां पूजयामि
ऐं ह्रीं श्री ॐ ज्वालामालिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ चित्रायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महानित्यायै नमः पादुकां पूजयामि । (३०८)
ऐं ह्रीं श्रीं ॐ परमेश्वरपरमेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ मित्रीशमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ षष्ठीशमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ उड्डीशमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ चर्यानाथमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ लोपामुद्रामय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ अगस्त्यमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कालतापनमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ धर्माचारमय्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ॐ मुक्तकेशीश्वरमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ दीपकलानाथमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ विष्णुदेवमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ प्रभाकरदेवमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ तेजोदेवमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ मनोजदेवमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कल्याणदेवमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ रत्नदेवमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ वासुदेवमय्यै नमः पादुकां पूजयामि । (५९५)
ऐं ह्रीं श्रीं ॐ श्रीरामानन्दमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ अणिमासिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ लघिमासिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महिमासिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ ईशित्वसिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ वशित्वसिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ प्राकाम्यसिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ भुक्तिसिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ इच्छासिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ प्राप्तिसिद्धये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वकामसिद्धये नमः पादुकां पूजयामि । (७४६)
ऐं ह्रीं श्रीं ॐ ब्राह्म्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ माहेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कौमार्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ वैष्णव्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ वाराह्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ माहेन्द्र्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ॐ चामुण्डायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः पादुकां पूजयामि । (८४४)
ऐं ह्रीं श्रीं ॐ सर्वसंक्षोभिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वविद्राविण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वाकर्षिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्ववशङ्कर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वोन्मादिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वमहाङ्कुशायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वखेचर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वबीजायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वयोनये नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वत्रिखण्डायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रैलोक्यमोहनचक्रस्वामिन्यै नमः पादुकां पूजयामि।
ऐं ह्रीं श्रीं ॐ प्रकटयोगिन्यै नमः पादुकां पूजयामि । (१०२४)
ऐं ह्रीं श्रीं ॐ कामाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ बुद्ध्याकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ अहङ्काराकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ शब्दाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ स्पर्शाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ रूपाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ रसाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ गन्धाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ चित्ताकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ धैर्याकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ स्मृत्याकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ नामाकर्षण्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ३ॐ बीजाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ आत्माकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अमृताकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ शरीराकर्षण्यै नमः पादुकां पूजयामि । (१२४९)
ऐं ह्रीं श्रीं ३ॐ सर्वाशापरिपूरकचक्रस्वामिन्यै नमः पादुकां पूजयामि।
ऐं ह्रीं श्रीं ३ॐ गुप्तयोगिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गकुसुमायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गमेखलायै नमः पादुकां पूजयामि
ऐं ह्रीं श्रीं ३ॐ अनङ्गमदनायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गमदनातुरायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गरेखायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गवेगिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गाङ्कुशायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ अनङ्गमालिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वसंक्षोभणचक्रस्वामिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ गुप्ततरयोगिन्यै नमः पादुकां पूजयामि । (१४३९)
ऐं ह्रीं श्रीं ३ॐ सर्वसंक्षोभिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वविद्राविण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वाकर्षण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वाह्लादिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वसम्मोहिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वस्तम्भिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वजृम्भिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्ववशङ्कर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वरञ्जिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ३ॐ सर्वोन्मादिन्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ॐ सर्वार्थसाधिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वसम्पत्तिपूरण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वमन्त्रमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वद्वन्द्वक्षयङ्कर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वसौभाग्यदायकचक्रस्वामिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सम्प्रदाययोगिन्यै नमः पादुकां पूजयामि । (१६८५)
ऐं ह्रीं श्रीं ॐ सर्वसिद्धिप्रदायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वसम्पत्प्रदायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वप्रियङ्कर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वमङ्गलकारिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वकामप्रदायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वदुःखविमोचिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वमृत्युप्रशमन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वविघ्ननिवारिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वाङ्गसुन्दर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वसौभाग्यदायिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वार्थसाधकचक्रस्वामिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कुलोत्तीर्णयोगिन्यै नमः पादुकां पूजयामि । (१८८४)
ऐं ह्रीं श्रीं ॐ सर्वज्ञायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वशक्त्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वैश्वर्यप्रदायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वज्ञानमय्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वव्याधिविनाशिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वाधारस्वरूपायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वपापहरायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वानन्दमय्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ॐ सर्वरक्षास्वरूपिण्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वेप्सितप्रदायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वरक्षाकरचक्रस्वामिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ निगर्भयोगिन्यै नमः पादुकां पूजयामि । (२०७४)
ऐं ह्रीं श्रीं ॐ वशिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कामेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ मोदिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ विमलायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ अरुणायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ जयिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ कौलिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वरोगहरचक्रस्वामिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ रहस्ययोगिन्यै नमः पादुकां पूजयामि । (२२०८)
ऐं ह्रीं श्रीं ॐ बाणिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ चापिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ पाशिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ अङ्कुशिन्यै नमः पादुकां पूजयामि । (२२५६)
ऐं ह्रीं श्रीं ॐ महाकामेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महावज्रेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महाभगमालिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महाश्रीसुन्दर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वसिद्धिप्रदचक्रस्वामिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ अतिरहस्ययोगिन्यै नमः पादुकां पूजयामि । (२३५३)
ऐं ह्रीं श्रीं ॐ श्रीश्रीमहाभट्टारिकायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ सर्वानन्दमयचक्रस्वामिन्यै नमः पादुकां पूजयामि ।

ऐं ह्रीं श्रीं ॐ परापररहस्ययोगिन्यै नमः पादुकां पूजयामि । (२४१०)
ऐं ह्रीं श्रीं ॐ त्रिपुरायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुरेश्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुरसुन्दर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुरवासिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुराश्रियै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुरमालिन्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुरासिद्धायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ त्रिपुराम्बायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महात्रिपुरसुन्दर्यै नमः पादुकां पूजयामि । (२५४१)
ऐं ह्रीं श्रीं ॐ महामहेश्वर्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहाराज्ञ्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहाशक्त्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहागुप्तायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहाज्ञप्त्यै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहानन्दायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहास्पन्दायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहाशयायै नमः पादुकां पूजयामि ।
ऐं ह्रीं श्रीं ॐ महामहाश्रीचक्रनगरसाम्राज्ञ्यै नमः पादुकां पूजयामि।
ऐं ह्रीं श्रीं ॐ नमस्ते नमस्ते नमस्ते स्वाहा श्रीं ह्रीं ऐं ॥ (२६९६)

षण्णवत्युत्तरषट्शताधिकद्विसहस्राक्षराणि।
इति शुद्धशक्तिनमोऽन्तमाला ।

***

## ३ शुद्धशक्तिस्वाहान्तमाला ।

ई

### श्री नित्यक्लिन्ना नित्या

**सर्वाङ्गादिशुभां सदा सुचरितां सौभाग्यसौख्यप्रदां**
**गीर्वाणार्चितपादपद्मयुगलां गौरीं गणेशप्रियाम् ।**
**शर्वाणीं शरदिन्दुबिम्बवदनां निर्वाणबीजाङ्कुरां**
**ध्यायेत् दक्षिणकालहस्तिनिलयां दिव्याङ्गरागोज्ज्वलाम् ॥**

शुक्लतृतीयायाम् कृष्णत्रयोदश्याम्

अस्य श्रीशुद्धशक्तिस्वाहान्तमालामहामन्त्रस्य, पादेन्द्रियाधिष्ठायिधात्रादित्यऋषये नमः। अनुष्टुप्छन्दसे नमः। मोक्षदईकारभट्टारकपीठस्थित-ईश्वरकामेश्वराङ्कनिलयायै ईश्वरीकामेश्वरीललितामहाभट्टारिकायै देवतायै नमः। ऐं बीजं, क्लीं शक्तिः, सौः कीलकम् । अञ्जनसिद्धौ विनियोगः।

**ह्रां इत्यादि करहृदयादिन्यासः-**

### ध्यानम्

**सिद्धाञ्जनं समासाद्य तेनाञ्जनितलोचनः ।**
**निधिं पश्यति सर्वत्र भक्तस्तेन समृद्धिमान् ॥**

### गायत्री

**नित्यक्लिन्नायै विद्महे नित्यमदद्रवायै धीमहि । तन्नो नित्या प्रचोदयात् ।**

**लमित्यादि पञ्चपूजा-**

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर्यै स्वाहा (१४)

हृदयदेव्यै स्वाहा
शिरोदेव्यै स्वाहा
शिखादेव्यै स्वाहा
कवचदेव्यै स्वाहा

नेत्रदेव्यै स्वाहा
अस्त्रदेव्यै स्वाहा (५१)
कामेश्वर्यै स्वाहा
भगमालिन्यै स्वाहा
नित्यक्लिन्नायै स्वाहा
भेरुण्डायै स्वाहा
वह्निवासिन्यै स्वाहा
महावज्रेश्वर्यै स्वाहा
शिव(शिवा)दूत्यै स्वाहा
त्वरितायै स्वाहा
कुलसुन्दर्यै स्वाहा
नित्यायै स्वाहा
नीलपताकायै स्वाहा
विजयायै स्वाहा
सर्वमङ्गलायै स्वाहा
ज्वालामालिन्यै स्वाहा
चित्रायै स्वाहा
महानित्यायै स्वाहा (१५७)
परमेश्वरपरमेश्वर्यै स्वाहा
मित्रीशमय्यै स्वाहा
षष्ठीशमय्यै स्वाहा
उड्डीशमय्यै स्वाहा
चर्यानाथमय्यै स्वाहा
लोपामुद्रामय्यै स्वाहा
अगस्त्यमय्यै स्वाहा
कालतापनमय्यै स्वाहा
धर्माचारमय्यै स्वाहा
मुक्तकेशीश्वरमय्यै स्वाहा
दीपकलानाथमय्यै स्वाहा
विष्णुदेवमय्यै स्वाहा
प्रभाकरदेवमय्यै स्वाहा
तेजोदेवमय्यै स्वाहा
मनोजदेवमय्यै स्वाहा
कल्याणदेवमय्यै स्वाहा
रत्नदेवमय्यै स्वाहा
वासुदेवमय्यै स्वाहा (३०८)
श्रीरामानन्दमय्यै स्वाहा
अणिमासिद्धये स्वाहा
लघिमासिद्धये स्वाहा
महिमासिद्धये स्वाहा
ईशित्वसिद्धये स्वाहा
वशित्वसिद्धये स्वाहा
प्राकाम्यसिद्धये स्वाहा
भुक्तिसिद्धये स्वाहा
इच्छासिद्धये स्वाहा
प्राप्तिसिद्धये स्वाहा
सर्वकामसिद्धये स्वाहा (३८२)
ब्राह्मयै स्वाहा
माहेश्वर्यै स्वाहा
कौमार्यै स्वाहा
वैष्णव्यै स्वाहा
वाराह्यै स्वाहा
माहेन्द्र्यै स्वाहा
चामुण्डायै स्वाहा

महालक्ष्म्यै स्वाहा (४३४)
सर्वसंक्षोभिण्यै स्वाहा
सर्वविद्राविण्यै स्वाहा
सर्वाकर्षिण्यै स्वाहा
सर्ववशङ्कर्यै स्वाहा
सर्वोन्मादिन्यै स्वाहा
सर्वमहाङ्कुशायै स्वाहा
सर्वखेचर्यै स्वाहा
सर्वबीजायै स्वाहा
सर्वयोन्यै स्वाहा
सर्वत्रिखण्डायै स्वाहा
त्रैलोक्यमोहनचक्रस्वामिन्यै स्वाहा
प्रकटयोगिन्यै स्वाहा (५३१)
कामाकर्षण्यै स्वाहा
बुद्ध्याकर्षण्यै स्वाहा
अहङ्काराकर्षण्यै स्वाहा
शब्दाकर्षण्यै स्वाहा
स्पर्शाकर्षण्यै स्वाहा
रूपाकर्षण्यै स्वाहा
रसाकर्षण्यै स्वाहा
गन्धाकर्षण्यै स्वाहा
चित्ताकर्षण्यै स्वाहा
धैर्याकर्षण्यै स्वाहा
स्मृत्याकर्षण्यै स्वाहा
नामाकर्षण्यै स्वाहा
बीजाकर्षण्यै स्वाहा
आत्माकर्षण्यै स्वाहा
अमृताकर्षण्यै स्वाहा
शरीराकर्षण्यै स्वाहा
सर्वाशापरिपूरकचक्रस्वामिन्यै स्वाहा (६४८)
गुप्तयोगिन्यै स्वाहा
अनङ्गकुसुमायै स्वाहा
अनङ्गमेखलायै स्वाहा
अनङ्गमदनायै स्वाहा
अनङ्गमदनातुरायै स्वाहा
अनङ्गरेखायै स्वाहा
अनङ्गवेगिन्यै स्वाहा
अनङ्गाङ्कुशायै स्वाहा
अनङ्गमालिन्यै स्वाहा
सर्वसंक्षोभणचक्रस्वामिन्यै स्वाहा
गुप्ततरयोगिन्यै स्वाहा (७३९)
सर्वसंक्षोभिण्यै स्वाहा
सर्वविद्राविण्यै स्वाहा
सर्वाकर्षिण्यै स्वाहा
सर्वाह्लादिन्यै स्वाहा
सर्वसम्मोहिन्यै स्वाहा
सर्वस्तम्भिन्यै स्वाहा
सर्वजृम्भिण्यै स्वाहा
सर्ववशङ्कर्यै स्वाहा
सर्वरञ्जिन्यै स्वाहा
सर्वोन्मादिन्यै स्वाहा
सर्वार्थसाधिन्यै स्वाहा
सर्वसम्पत्तिपूरण्यै स्वाहा
सर्वमन्त्रमय्यै स्वाहा

सर्वद्वन्द्वक्षयङ्कर्यै स्वाहा
सर्वसौभाग्यदायकचक्रस्वामिन्यै स्वाहा
सम्प्रदाययोगिन्यै स्वाहा (८७३)
सर्वसिद्धिप्रदायै स्वाहा
सर्वसम्पत्प्रदायै स्वाहा
सर्वप्रियङ्कर्यै स्वाहा
सर्वमङ्गलकारिण्यै स्वाहा
सर्वकामप्रदायै स्वाहा
सर्वदु:खविमोचिन्यै स्वाहा
सर्वमृत्युप्रशमन्यै स्वाहा
सर्वविघ्ननिवारिण्यै स्वाहा
सर्वाङ्गसुन्दर्यै स्वाहा
सर्वसौभाग्यदायिन्यै स्वाहा
सर्वार्थसाधकचक्रस्वामिन्यै स्वाहा
कुलोत्तीर्णयोगिन्यै स्वाहा (९८८)
सर्वज्ञायै स्वाहा
सर्वशक्तये स्वाहा
सर्वैश्वर्यप्रदायै स्वाहा
सर्वज्ञानमय्यै स्वाहा
सर्वव्याधिविनाशिन्यै स्वाहा
सर्वाधारस्वरूपायै स्वाहा
सर्वपापहरायै स्वाहा
सर्वानन्दमय्यै स्वाहा
सर्वरक्षास्वरूपिण्यै स्वाहा
सर्वेप्सितप्रदायै स्वाहा
सर्वरक्षाकरचक्रस्वामिन्यै स्वाहा
निगर्भयोगिन्यै स्वाहा (१०१४)

वशिन्यै स्वाहा
कामेश्वर्यै स्वाहा
मोदिन्यै स्वाहा
विमलायै स्वाहा
अरुणायै स्वाहा
जयिन्यै स्वाहा
सर्वेश्वर्यै स्वाहा
कौलिन्यै स्वाहा
सर्वरोगहरचक्रस्वामिन्यै स्वाहा
रहस्ययोगिन्यै स्वाहा (११५८)
बाणिन्यै स्वाहा
चापिन्यै स्वाहा
पाशिन्यै स्वाहा
अङ्कुशिन्यै स्वाहा (११७८)
महाकामेश्वर्यै स्वाहा
महावज्रेश्वर्यै स्वाहा
महाभगमालिन्यै स्वाहा
महाश्रीसुन्दर्यै स्वाहा
सर्वसिद्धिप्रदचक्रस्वामिन्यै स्वाहा
अतिरहस्ययोगिन्यै स्वाहा (१२३३)
श्रीश्रीमहाभट्टारिकायै स्वाहा
सर्वानन्दमयचक्रस्वामिन्यै स्वाहा
परापररहस्ययोगिन्यै स्वाहा (१२६९)
त्रिपुरायै स्वाहा
त्रिपुरेश्यै स्वाहा
त्रिपुरसुन्दर्यै स्वाहा
त्रिपुरवासिन्यै स्वाहा

